न्नेव स भवति असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः" इति "को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्" इत्युपपत्तिः ॥

तथा मुण्डके च । "अथ परा यया तदक्षरमधिगम्यते" इत्युपक्रमः । "ब्रह्मैवेदममृतं पुरस्तात्" इत्युपसंहारः । "येनाक्षरं पुरुषं वेद सत्यं" "तदेतदक्षरं ब्रह्म" "तमेवैकं जानथ आत्मानं" इत्याद्यभ्यासः । "न चक्षुषा गृह्यते नापि वाचा" इत्यारभ्य "वेदान्तविज्ञानसुनिश्चितार्थाः" इत्यन्तेनापूर्वतासूचनम् । "निरञ्जनः परमं साम्यमुपैति" "ब्रह्म वेद ब्रह्मैव भवति" इति फलश्रुतिः । "यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः" इत्याद्यर्थवादः । "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति" इत्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञारूपा ह्युपपत्तिः । एवमैतरेयादिष्वपि शाखान्तरेषूपक्रमाद्यूहनीयम् ॥

मननं लक्षयति मननं तु इति । केवलं पुरुषबुद्ध्युत्प्रेक्षितशुष्कतर्कव्यावृत्त्यर्थं वेदान्तानुगुण॰ इतिविशेषणम् ।

"आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः" ॥

इतिस्मृतेः । अत्र धर्मशब्दो ब्रह्मणोऽप्युपलक्षणार्थः । अनवरतपदं मननस्यावश्यकत्वद्योतनार्थम् ॥

निदिध्यासनलक्षणमाह विजातीय॰ इति । चित्तस्य ज्ञेयात्मना निश्चलावस्थानं समाधिस्तं विभज्य लक्षयति समाधिः इत्यादिना । सविकल्पकः सम्प्रज्ञातसमाधिर्निर्विकल्पकोऽसम्प्रज्ञातसमाधिरिति साम्प्रदायिकी संज्ञा द्रष्टव्या । तत्रेत्युद्दिष्टसमाधिद्वयं सप्तम्यर्थः । ज्ञाता ज्ञानं ज्ञेयं चेति यो विकल्पो विभागोल्लेखस्तस्य लयोऽभावस्तदनपेक्षया ज्ञात्रादिविकल्पोल्लेखपूर्वकमिति यावत् । अद्वितीय॰ इति च्छेदः । सविकल्पकसमाधिलक्षणार्थमुदाहरणेन प्रत्याययति तदा मृदिति । यथा मृद्विकारे गजे कुम्भकारादिनिर्मिते गजोऽयमित्यस्यां बुद्धौ गजाकारोल्लेखेऽपि मृन्मात्रमेव सत्यं भासते गजाकारस्य मिथ्यात्वनिश्चयादेवं ब्रह्माकारायां वृत्तौ ज्ञात्राद्याकारे उल्लिख्यमानेऽपि ब्रह्मैव सत्यं भासते न ज्ञात्रादिविकल्प इत्यर्थः ॥

---

१. *Tait.* 2. 7. 1 २. *Mund* 1. 1. 5. ३. *Idem.* 2. 2. 11. ४. *Idem.* 1. 2. 13. ५. *Idem.* 2. 2. 2. ६. *Idem.* 2. 2. 5. ७. *Idem.* 3. 1. 8. ८. *Idem.* 3. 2. 6. ९. *Idem.* 3. 1. 3. १०. *Idem.* 3. 2. 9. ११. *Idem.* 2. 1. 1. १२. *Idem.* 1. 1. 3. १३. *Manu.* xii 106.

कथं तत्र ब्रह्म भासत इत्यपेक्षायां पूर्वाचार्यसम्मत्युदाहरणेन तत्स्वरूपमाह तदुक्तमभिनीय इति। अभिनयमङ्गचेष्टाविशेषं कृत्वेत्यर्थः। दृशिस्वरूपं चैतन्यघनं "विज्ञानघन एव"[1] इत्यादिश्रुतेः। गगनोपमं सर्वगतं "आकाशवत्सर्वगतश्च" इतिश्रुतेः। परं मायातीतं "अक्षरात्परतः परः"[2] इत्यादिश्रुतेः। सकृद्विभातमेकदैव कृत्स्नमभिव्यक्तं "सकृद्दिवा हैवास्मै भवति"[3] इत्यादिश्रुतेः। तुशब्दः पादपूरणार्थः। अजं जन्मादिविकारशून्यं "न जायते म्रियते वा विपश्चित्"[4] इत्यादिश्रुतेः। एकं सजातीयविजातीयशून्यं "एको देवः"[5] "एकं सन्तं बहुधा कल्पयन्ति"[6] इतिश्रुतेः। अक्षरं कूटस्थं नित्यं "येनाक्षरं पुरुषं वेद सत्यं"[7] इतिश्रुतेः। अलेपकं "निरवद्यं निरञ्जनं"[8] इतिश्रुतेः। सर्वगतं सर्वानुस्यूतं सन्मात्रं "यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं"[9] इत्यादिश्रुतेः। यदद्वयं स्वगतभेदशून्यं "अशब्दमस्पर्शमरूपं"[10] इत्यादिश्रुतेः। तदेव चाहमस्मि "अहं ब्रह्मास्मि"[11] इतिश्रुतेः। अतोऽहं सततं सर्वदैव विमुक्तो न कदापि बद्धो "विमुक्तश्च विमुच्यत"[12] इति श्रुतेरिति श्लोकार्थः॥

निर्विकल्पकसमाधिं लक्षयति निर्विकल्पकस्तु इति। अत्राप्यद्वितीयेति च्छेदः। अतितरामेकीभावेनावस्थाने दृष्टान्तः तदा जलेति। दृष्टान्तदर्शितमर्थं दार्ष्टान्तिके योजयति अद्वितीयेति। ननु सुषुप्तावपि ज्ञातृज्ञेयज्ञानविभागानां लयसम्भवात्तत्र निर्विकल्पकसमाधिलक्षणमतिव्याप्तोतीत्यत आह ततश्चेति। तत्र हेतुमाह उभयत्रेति। सुषुप्तौ बुद्धिरेव नास्ति बुद्धेः कारणात्मनावस्थानस्य तल्लक्षणत्वात्। इह तु बुद्धिवृत्तेरद्वितीयवस्त्वाकाराकारिताया अवस्थानाङ्गीकारात्सुषुप्तेर्भेदोपपत्तेरित्यर्थः। नापि मुक्तावतिव्याप्तिस्तत्राविद्यातत्कार्यसंस्काराणामत्यन्तमुच्छेदात्। इह पुनर्व्युत्थानादिव्यवहारदर्शनेन तेषामनुवृत्तेरिष्टत्वात्। नापि जीवन्मुक्तौ प्रसङ्गस्तस्य व्युत्थानदशायामपि बाधितानुवृत्तिमात्रप्रपञ्चावभासेऽपि स्वस्वरूप एवावस्थानात्साधकस्य बाधितानुवृत्तिमात्रप्रपञ्चावभासाभावादिति द्रष्टव्यम्॥३०॥

उक्तनिर्विकल्पकसमाधिस्वरूपोपकारकाण्यङ्गान्याह अस्य इति। तत्र यमानाह तत्रेति। वाङ्मनःकायैः परपीडावर्जनमहिंसा। सत्यं यथार्थभाषणम्। अस्तेयमदत्तादानरूपपरस्वहरणराहित्यम्। ब्रह्मचर्यमष्टाङ्गमैथुनवर्जनम्। तथा चोक्तं।

---

१. *Bṛih.* 2. 4. 12. २. *Muṇḍ.* 2. 1. 2. ३. *Chhā.* 3. 11. 3. ४. *Kaṭha.* 2. 18. ५. *S'vet.* 6. 11. ६. *Ṛik-saṁhitā* 10. 114. 5. ७. *Muṇḍ.* 1. 2. 13. ८. *S'vet.* 6. 19. ९. *Muṇḍ.* 2. 2. 5. १०. *Kaṭha.* 3. 15. ११. *Bṛih.* 1. 4. 10. १२. *Kaṭha.* 5. 1.

"स्मरणं[1] कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् ।
सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च ॥
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ।
विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम्" ॥ इति ।

अपरिग्रहः समाध्यनुष्ठानानुपयुक्तस्य वस्तुमात्रस्यासङ्ग्रहः ॥

नियमानाह शौच इति । शौचं बाह्याभ्यन्तरलक्षणम् । तदुक्तं[2] ।

"शौचं तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा ।
मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथान्तरम्" ॥ इति ।

सन्तोषो यदृच्छालाभसन्तुष्टिरलाभे चाविषादः । तपः कामानशनं "तपो[3] नानशनात्परं" इतिश्रुतेः । अनशनं च कामानशनमेव । केचित्तु "मन[4]-सश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तप" इत्याद्युक्तलक्षणं तप इत्याहुः । सर्वथा तु नात्र चान्द्रायणादिः तपःशब्दार्थस्तस्य समाधिविरोधादिति द्रष्टव्यम् । स्वाध्यायः प्रणवजप उपनिषद्ग्रन्थावृत्तिश्च "ओमित्येवं[5] ध्यायथ आत्मानं" "उपनिषदमावर्तयेत्[6]" इतिश्रुतेः । ईश्वरप्रणिधानं तस्य मानसै-रुपचारैरभ्यर्चनं "तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै[7] शरणमहं प्रपद्ये" इतिमन्त्रलिङ्गात् ॥

अथासनादीनि कथयति कर इति । स्वस्तिकादीनीत्यादिपदाद्भद्री-रासनादिग्रहः । रेचकः प्राणवायोः शनैर्वामनासापुटाद्दक्षिणनासापुटाद्वा सव्यापसव्यन्यायेन बहिर्निःसारणम् । पूरकस्तस्य तथैवान्तःप्रवेशनम् । कुम्भकस्तु पूरितस्य वायोरन्तरेव निरोध इति भेदः । समाधेर्ध्यानस्य भेदं द्योतयितुं विच्छिद्य विच्छिद्येत्युक्तम् सुगममन्यत् ॥ ३१ ॥

एवं साङ्गसमाधिमनुतिष्ठतो यदातिवृष्ट्यनावृष्टिराष्ट्रविप्लवव्याघ्रचौर-ज्वराद्युपद्रवविघ्नसम्भावना भवति तदा तन्निवृत्तिर्लौकायतसाधना-वलम्बनेन कार्या । यदा तु मनस्येव विघ्नाः प्रादुर्भविष्यन्ति तदा तन्नि-वारणोपायमुपदेष्टुकामस्तत्रत्यान्विघ्नान्निर्दिशति अस्येति । लयादीन्विभज्य लक्षयति लयस्तावदिति ॥ ३२ ॥

---

१. *Daksha-saṁhitā*, chap. 7. The last line, however, is not in the Bombay edition (consisting of 28 Smṛitis, styled *Dharmaśāstra-Sangraha.*) २. *Yājnavalkyagītā* i. 69, and *Dakṣasaṁhitā* 5. ३. *Mahānār.* 21. 2. ४. *Upadeśasāhasrī* xvii. 24. Compare "मनसश्चेन्द्रियाणां चाप्यैकाग्र्यं निश्चितं तपः" । *Mahābhārata.* 3. 15429 (3. 260. 25 of Bombay edition) ५. *Muṇḍ.* 2. 2. 6. ६. *Āruṇeya.* 2. ७. *S'vet.* 6. 18.

उक्तलयादिविघ्नचतुष्टयाभावेन चित्तस्य ज्ञेये वस्तुनि यन्नैश्चल्यं तद्दृष्टान्तेन निर्विकल्पकसमाधिलक्षणमित्याह तदेति। विघ्ननिवृत्त्युपायं सम्मतिप्रदर्शनेनाह तदुक्तमित्यादिना। लये सम्बोधयेत् उत्तम्भयेत्सोत्साहं मनः कुर्यादिति यावत्। विक्षिप्तं चित्तं धैर्यावलम्बनेन पुनः शमयेत्पुनरद्वितीयवस्तुनिष्ठं कुर्यादित्येतत्। सकषायं चित्तं विजानीयात्कलुषितं मे चित्तमिति विज्ञाय च समेऽद्वितीयचैतन्यात्मनि निवेशयेत्। पुनः शमप्राप्तं तन्न चालयेत्तत्रैव प्रयत्नपूर्वकं स्थिरीकुर्यादित्यर्थः। रसं सविकल्पकानन्दं नास्वादयेत्तदानन्दमात्रेण कृतार्थतां न मन्वीत किन्तु प्रज्ञया विवेकबुद्ध्या निःसङ्गः सविकल्पकानन्देऽनासक्तो भवेदित्यर्थः। एवं विघ्नपरिहारे सति यन्निर्विकल्पकसमाध्यवस्थानं चित्तस्य तद्भगवद्वाक्योदाहरणेन दर्शयति यथा दीप इति ॥ ३३ ॥

एवंविधसमाध्यन्तसाधनानुष्ठानपरिपाके सति पूर्वोक्तप्रकारेण ब्रह्मात्मैक्यसाक्षात्कारे दृढीभूतेऽविद्यातत्कार्यात्मकसर्वसंसारनिवृत्तौ जायमानायां काकतालीयन्यायेन यदि प्रारब्धकर्मक्षयात्तत्काल एव विदुषः शरीरपातस्तदा सद्य एव मुक्तिः स्यात्। यदा तु ज्ञानोत्पत्तिसमये प्रारब्धकर्म न क्षीयते तदा तत्क्षयपर्यन्तं शरीरस्यावस्थानाज्जीवन्नेव मुक्तसंसारो भवति। तस्य लक्षणं वक्तुं प्रतिजानीते अथ इति। अथशब्दः साधननिरूपणानन्तर्यार्थः। लक्षणमाह जीवन्मुक्तो नाम इति। ब्रह्मनिष्ठत्वं वेदान्तवेद्यब्रह्मात्मनावस्थितत्वम्। ब्रह्मनिष्ठो जीवन्मुक्त इत्युक्ते परमार्थतो ब्रह्मनिष्ठत्वममुक्तस्याप्यस्तीत्यतो विशिनष्टि अखिलबन्धरहित इति। परममुक्तवैधर्म्यसिद्धये प्रारब्धकर्ममात्रशेष इति विशेषणान्तरमध्याहर्तव्यम्। कथमसौ मुक्त इत्यपेक्षायामाह अज्ञानतत्कार्य[1] इति। अज्ञानं सदसद्भ्यामनिर्वचनीयमित्याद्युक्तलक्षणम्। तत्कार्यं स्थूलसूक्ष्मप्रपञ्चद्वयम्। सञ्चितं कर्म ज्ञानोत्पत्तेः प्रागुत्पन्नमनारब्धफलम्। संशयो देहाद्यतिरिक्तो ब्रह्मस्वरूप आत्मा भवति न वेति। अथवा ब्रह्मात्मविज्ञानान्मोक्षो भवेन्न वेत्यादिविचिकित्सा। विपर्ययो देहादिष्वात्माभिमानादिलक्षणः। आदिशब्दाद्बाह्यप्रपञ्चे सत्यत्वबुद्धिः। एतेषां बाधितत्वान्मुक्त इत्यर्थः। एतत्कदा स्यादित्याकाङ्क्षायामाह स्वस्वरूपाखण्डब्रह्मणि साक्षात्कृते सति इति। साक्षात्कारे साधनमाह स्वस्वरूपाखण्डब्रह्मज्ञानेनेति ॥

तत्त्वसाक्षात्कारानन्तरं मुक्त एव भवतीत्यत्र प्रमाणमाह भिद्यत इति। हृदयग्रन्थिरहङ्कारश्चिज्जडात्मकत्वाद्ग्रन्थिरिव ग्रन्थिः। सर्वसंशया दृष्टादृष्टार्थ-

---

१. So MSS. but शमयेत् P. २. *Maxims* i ( 2nd edn ).

विषया विचिकित्साः । अस्यात्मनः कर्माणि जीवन्मुक्तिपक्षे प्रारब्धातिरिक्तानि सञ्चितानि क्रियमाणानि च । तथा च न्यायः "[1]तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्" इति । परममुक्तिपक्षे प्रारब्धसहितान्यपि क्षीयन्ते । कदा । तस्मिन्निष्प्रपञ्चे ब्रह्मात्मनि दृष्टे सति साक्षात्कृते सति । कथम्भूते । परावरे सर्वात्मके । अत्र सर्वात्मकत्ववचनं तद्व्यतिरिक्तस्याभावपरम् । चौरः स्थाणुरितिवद्बाधायां सामानाधिकरण्यस्य विवक्षितत्वात् । यद्वा परो हिरण्यगर्भः सोऽवरो न्यूनो यस्मात्तस्मिन्परावर इत्याथर्वणीयश्रुत्यर्थः । आदिपदात् "यस्तु सर्वाणि भूतानि" "यस्मिन्सर्वाणि भूतानि" इति च मन्त्रद्वयमीशावास्यगतं परिगृह्यते । श्रुतेश्चेति । चकारात् "[3]यथैधांसि समिद्धोऽग्निः" "[4]यज्ज्ञात्वा न पुनर्मोहं" "[5]ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति" इत्यादिस्मृतयः समुच्चीयन्ते । न च जीवन्मुक्तौ प्रमाणाभावः । "[6]तद्यथाहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं शरीरं शेते" "[7]तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" इत्यादिश्रुतेः "[8]प्रजहाति यदा कामान्" "[9]प्रकाशं च प्रवृत्तिं च" इत्यादिस्मृतेश्च प्रमाणत्वादिति द्रष्टव्यम् ॥ ३४ ॥

ननु जीवन्मुक्तो देहेन्द्रियादिभिर्व्यवहरति न वा । आद्ये तस्य बद्धाद्विलक्षणता । द्वितीये देहस्यानुपयोगात्सद्यः पातप्रसङ्गः इत्याह अयं तु इति । आरब्धफलानि भुज्यमानानि पूर्वपूर्ववासनया क्रियमाणानि च कर्माणि साक्षितया कर्तृत्वभोक्तृत्वाभिमानहीनोऽन्यदृष्ट्या पश्यन्निव भासमानोऽपि परमार्थतः स्वदृष्ट्या न पश्यति ज्ञानेन कर्तृत्वाद्यभिमानमूलाज्ञानस्य बाधितत्वाद्बद्धाद्विलक्षण एवायमित्यर्थः । बलवत्प्रयुक्तबाणपाषाणादिवत्प्रवृत्तफलस्य कर्मणो यावद्वेगक्षयं निवारकाभावात्तदधीनस्य देहस्य न सद्यः पातप्रसङ्ग इति द्रष्टव्यम् । उक्तमर्थं दृष्टान्तेन स्पष्टयति यथेन्द्रजालं इति । बाधितत्वबुद्धेरनुवृत्तेरित्यर्थः । जीवन्मुक्तो देहादिभिर्व्यवहरन्निव दृश्यमानोऽपि न परमार्थतो व्यवहरतीत्यत्र श्रुतिं प्रमाणयति सचक्षुरचक्षुरिवेति । चक्षुरादिमानपि प्रपञ्चरूपार्थदर्शनाच्चक्षुरादिहीन इव भवतीत्यर्थः । आदिपदात् "[10]तदेजति तन्नैजति" इत्यादिश्रुत्यन्तरग्रहः । उक्तेऽर्थे पूर्वाचार्यसम्मतिमाह उक्तं च सुषुप्तवदिति । जाग्रति जाग्रदवस्थायां द्वैतं पश्यन्नपि यः सुषुप्तिं गतवद्विशेषतो न पश्यति स आत्मवित् । विशेषादर्शने हेतुरद्वयत्वत इति । द्वयस्य बाधितत्वादित्यर्थः । तथा कुर्वन्नपि न करोति

---

१. *Brahmasūtra* 4. 1. 13. २. Verses 6, 7. ३. *Gītā* iv. 37. ४. *Idem* iv. 35. ५. *Idem* xviii. 54. ६. *Bṛih.* 4. 4. 7. ७. *Chhā.* 6. 14. 2. ८. *Gītā* ii. 55. ९. *Idem* xiv. 22. १०. *Īśā.* 5.

उक्तलयादिविघ्नचतुष्टयाभावेन चित्तस्य ज्ञेये वस्तुनि यन्नैश्चल्यं तद्दृष्टान्तेन निर्विकल्पकसमाधिलक्षणमित्याह तदेति। विघ्ननिवृत्त्युपायं सम्मतिप्रदर्शनेनाह तदुक्तमित्यादिना। लये सम्बोधयेत् उत्तम्भयेत्सोत्साहं मनः कुर्यादिति यावत्। विक्षिप्तं चित्तं धैर्यावलम्बनेन पुनः शमयेत्पुनरद्वितीयवस्तुनिष्ठं कुर्यादित्येतत्। सकषायं चित्तं विजानीयात्कलुषितं मे चित्तमिति विज्ञाय च समेऽद्वितीयचैतन्यात्मनि निवेशयेत्। पुनः शमप्राप्तं तन्न चालयेत्तत्रैव प्रयत्नपूर्वकं स्थिरीकुर्यादित्यर्थः। रसं सविकल्पकानन्दं नास्वादयेत्तदानन्दमात्रेण कृतार्थतां न मन्वीत किन्तु प्रज्ञया विवेकबुद्ध्या निःसङ्गः सविकल्पकानन्देऽनासक्तो भवेदित्यर्थः। एवं विघ्नपरिहारे सति यन्निर्विकल्पकसमाध्यवस्थानं चित्तस्य तद्भगवद्वाक्योदाहरणेन दर्शयति यथा दीप इति ॥ ३३ ॥

एवंविधसमाध्यन्तसाधनानुष्ठानपरिपाके सति पूर्वोक्तप्रकारेण ब्रह्मात्मैक्यसाक्षात्कारे दृढीभूतेऽविद्यातत्कार्यात्मकसर्वसंसारनिवृत्तौ जायमानायां काकतालीयन्यायेन यदि प्रारब्धकर्मक्षयात्तत्काल एव विदुषः शरीरपातस्तदा सद्य एव मुक्तिः स्यात्। यदा तु ज्ञानोत्पत्तिसमये प्रारब्धकर्म न क्षीयते तदा तत्क्षयपर्यन्तं शरीरस्यावस्थानाज्जीवन्नेव मुक्तसंसारो भवति। तस्य लक्षणं वक्तुं प्रतिजानीते अथ इति। अथशब्दः साधननिरूपणानन्तर्यार्थः। लक्षणमाह जीवन्मुक्तो नाम इति। ब्रह्मनिष्ठत्वं वेदान्तवेद्यब्रह्मात्मनावस्थितत्वम्। ब्रह्मनिष्ठो जीवन्मुक्त इत्युक्ते परमार्थतो ब्रह्मनिष्ठत्वमयुक्तस्याप्यस्तीत्यतो विशिनष्टि अखिलबन्धरहित इति। परममुक्तवैधर्म्यसिद्धये प्रारब्धकर्ममात्रशेष इति विशेषणान्तरमध्याहर्तव्यम्। कथमसौ मुक्त इत्यपेक्षायामाह अज्ञानतत्कार्य[1] इति। अज्ञानं सदसद्भ्यामनिर्वचनीयमित्याद्युक्तलक्षणम्। तत्कार्यं स्थूलसूक्ष्मप्रपञ्चद्वयम्। सञ्चितं कर्म ज्ञानोत्पत्तेः प्रागुत्पन्नमनारब्धफलम्। संशयो देहाद्यतिरिक्तो ब्रह्मस्वरूप आत्मा भवति न वेति। अथवा ब्रह्मात्मविज्ञानान्मोक्षो भवेन्न वेत्यादिविचिकित्सा। विपर्ययो देहादिष्वात्माभिमानादिलक्षणः। आदिशब्दाद्बाह्यप्रपञ्चे सत्यत्वबुद्धिः। एतेषां बाधितत्वान्मुक्त इत्यर्थः। एतत्कदा स्यादित्याकाङ्क्षायामाह स्वस्वरूपाखण्डब्रह्मणि साक्षात्कृते सति इति। साक्षात्कारे साधनमाह स्वस्वरूपाखण्डब्रह्मज्ञानेनेति ॥

तत्त्वसाक्षात्कारानन्तरं मुक्त एव भवतीत्यत्र प्रमाणमाह भिद्यत इति। हृदयग्रन्थिरहङ्कारश्चिज्जडात्मकत्वाद्ग्रन्थिरिव ग्रन्थिः। सर्वसंशया दृष्टादृष्टार्थ-

---

१. So MSS. but शमयेत् P. २. *Maxims* i ( 2nd edn ).

विषया विचिकित्साः । अस्यात्मनः कर्माणि जीवन्मुक्तिपक्षे प्रारब्धातिरिक्तानि सञ्चितानि क्रियमाणानि च । तथा च न्यायः "[१]तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्" इति । परममुक्तिपक्षे प्रारब्धसहितान्यपि क्षीयन्ते । कदा । तस्मिन्निष्प्रपञ्चे ब्रह्मात्मनि दृष्टे सति साक्षात्कृते सति । कथम्भूते । परावरे सर्वात्मके । अत्र सर्वात्मकत्ववचनं तद्व्यतिरिक्तस्याभावपरम् । चौरः स्थाणुरितिवद्बाधायां सामानाधिकरण्यस्य विवक्षितत्वात् । यद्वा परो हिरण्यगर्भः सोऽवरो न्यूनो यस्मात्तस्मिन्परावर इत्याथर्वणीयश्रुत्यर्थः । आदिपदात् "यस्तु सर्वाणि भूतानि" "यस्मिन्सर्वाणि भूतानि" इति च मन्त्रद्वयमीशावास्यगतं[२] परिगृह्यते । श्रुतेश्चेति । चकारात् "[३]यथैधांसि समिद्धोऽग्निः" "[४]यज्ज्ञात्वा न पुनर्मोहं" "[५]ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति" इत्यादिस्मृतयः समुच्चीयन्ते । न च जीवन्मुक्तौ प्रमाणाभावः । "[६]तद्यथाहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं शरीरं शेते" "[७]तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" इत्यादिश्रुतेः "[८]प्रजहाति यदा कामान्" "[९]प्रकाशं च प्रवृत्तिं च" इत्यादिस्मृतेश्च प्रमाणत्वादिति द्रष्टव्यम् ॥ ३४ ॥

ननु जीवन्मुक्तो देहेन्द्रियादिभिर्व्यवहरति न वा । आद्ये तस्य बद्धाद्विलक्षणता । द्वितीये देहस्यानुपयोगात्सद्यः पातप्रसङ्गः इत्याह अयं त्विति । आरब्धफलानि भुज्यमानानि पूर्वपूर्ववासनया क्रियमाणानि च कर्माणि साक्षितया कर्तृत्वभोक्तृत्वाभिमानहीनोऽन्यदृष्ट्या पश्यन्निव भासमानोऽपि परमार्थतः स्वदृष्ट्या न पश्यति ज्ञानेन कर्तृत्वाद्यभिमानमूलाज्ञानस्य बाधितत्वाद्बद्धाद्विलक्षण एवायमित्यर्थः । बलवत्प्रयुक्तबाणपाषाणादिवत्प्रवृत्तफलस्य कर्मणो यावद्भोगक्षयं निवारकाभावात्तदधीनस्य देहस्य न सद्यः पातप्रसङ्ग इति द्रष्टव्यम् । उक्तमर्थं दृष्टान्तेन स्पष्टयति यथेन्द्रजालमिति । बाधितत्वबुद्धेरनुवृत्तेरित्यर्थः । जीवन्मुक्तो देहादिभिर्व्यवहरन्निव दृश्यमानोऽपि न परमार्थतो व्यवहरतीत्यत्र श्रुतिं प्रमाणयति सचक्षुरचक्षुरिवेति । चक्षुरादिमानपि प्रपञ्चरूपाद्यदर्शनाच्चक्षुरादिहीन इव भवतीत्यर्थः । आदिपदात् "[१०]तदेजति तन्नैजति" इत्यादिश्रुत्यन्तरग्रहः । उक्तेऽर्थे पूर्वाचार्यसम्मतिमाह उक्तं च सुषुप्तवदिति । जाग्रति जाग्रदवस्थायां द्वयं पश्यन्नपि यः सुषुप्तिं गतवद्विक्षेपतो न पश्यति स आत्मवित् । विशेषादर्शने हेतुरद्वयत्वत इति । द्वयस्य बाधितत्वादित्यर्थः । तथा कुर्वन्नपि न करोति

१. *Brahmasūtra* 4. 1. 13. २. Verses 6, 7. ३. *Gītā* iv. 37. ४. *Idem* iv. 35. ५. *Idem* xviii. 54. ६. *Bṛih.* 4. 4. 7. ७. *Chhā.* 6. 14. 2. ८. *Gītā* ii. 55. ९. *Idem* xiv. 22. १०. *Īśā.* 5.

यतो निष्क्रिय इति योजना । तथा च वसिष्ठः "सुषुप्तवच्चरति स मुक्त इति कथ्यते" इति ॥ ३५ ॥

नन्वसौ जीवन्मुक्त इति कथमन्यैर्ज्ञायेत इति तदाह अस्य ज्ञानात्पूर्वं इति । अशुभवासनानां साधकावस्थायामेव निवर्तितत्वाच्छुभवासनानामेवानुवृत्तिर्भवतीत्यर्थः । ननु । शास्त्रविहितं शुभमेवाचरतो न साधकान्भेद इत्यपरितुष्यन्निवाह शुभाशुभयोरौदासीन्यं वा इति । औदासीन्यमुपेक्षा "हिंसानुग्रहयोरनारम्भी" इति गौतमस्मरणात् ।

"निराशिषमनारम्भं निर्नमस्कारमस्तुतिम् ।
अक्षीणं क्षीणकर्माणं तं देवा ब्राह्मणं विदुः" ॥

इति व्यासवचनात् । "अमौनं मौनं च निर्विद्याथ ब्राह्मण" इति बृहदारण्यकश्रुतेश्च । तथा चौदासीन्यमेव मुक्तलक्षणं न विधिपरतन्त्रप्रवृत्तिमत्त्वं न वा निषेधातिक्रम इति भावः ॥

विधिनिषेधशास्त्रपरवशत्वं चेन्मुक्तस्य न भवेत्तर्हि यथेष्टाचरणं प्राप्नोतीत्याशङ्कां नैष्कर्म्यसिद्धिवाक्येन प्रत्याचष्टे तदुक्तं बुद्ध इति । सतत्त्वं याथात्म्यम् । मुमुक्षोरपि नास्ति यथेष्टचेष्टा विदुषो मुक्तस्य कुत एव सा । तदप्युक्तं ।

"यो हि यत्र विरक्तः स्यान्नासौ तस्मिन्प्रवर्तते ।
लोकत्रयाद्विरक्तत्वान्मुमुक्षुः किमितीहते ॥
क्षुधया पीड्यमानोऽपि न विषं ह्यत्तुमिच्छति ।
मिष्टान्नध्वस्ततृड् जानन्नामूढस्तज्जिघत्सति ॥
रागो लिङ्गमबोधस्य चित्तव्यायामभूमिषु ।
कुतः शाड्वलता तस्य यस्याग्निः कोटरे तरोः" ॥ इत्यादि ३६

नन्वविद्याकार्यत्वाद्यथेष्टचेष्टाया अविद्यानिवृत्त्या तन्निवृत्तिवदमानित्वादीनामद्वेष्टृत्वादीनामप्यविद्याकार्यत्वाविशेषान्निवृत्तिरेव स्यान्नानुवृत्तिरित्याशङ्क्य नियोगवशादनुवृत्त्यभावेऽपि निवृत्तिशास्त्राविरुद्धस्वभावत्वान्न निवर्तेरन्निति दर्शयति तदानीं इति । तत्रापि नैष्कर्म्यसिद्धिमुदाहरति तदुक्तमुत्पन्ना इति ॥ ३७ ॥

---

१. *Yogavāsishṭha* 5. 16. 19. २. *Gautamadharmas'āstra* iii. 24. 25. See Notes. ३. *Mahābhārata* 12. 9430 ( chap. 264 ). It is found also on p. 1817 of Sures'vara's large Vārtika. ४. *Bṛih.* 3. 5. 1. ५. *Naishkarmyasiddhi* iv. 65-67. The first two verses, however, are taken from S'ankara's *Upades'asāhasrī* ( xviii. 231, 232 ).

इदानीमुक्तं जीवन्मुक्तमनूद्य तस्य परममुक्तिं दर्शयति किं बहुना इति। देहयात्रा देहस्थितिः । तन्मात्रार्थं न त्विन्द्रियप्रीत्यर्थम् । सुखदुःखलक्षणानि सुखदुःखसाधनानि । आरब्धफलानि भोग्यानि । अनुभवन्नसङ्गतया भुञ्जानः । कथं भुञ्जान इत्युच्यते अन्तःकरणाभासादीनां विषयाकारवृत्तीनां साक्षितयावभासकः सन्निति यावत् । तदवसाने प्रारब्धफलभोगावसाने जात आश्रयाभावात्प्राणे ब्रह्मणि लीने सति पूर्वसिद्धज्ञानेनैव प्रारब्धकर्माक्षिप्ताज्ञानतत्कार्यतत्संस्काराणामपि विनाशात्सञ्चितकर्मणां ज्ञानेन दाहात्क्रियमाणैश्चासंश्लेषात्पुनर्देहान्तरहेत्वभावात्परमकैवल्येत्यादिनोक्तब्रह्मस्वरूप एवावतिष्ठते विद्वानित्यर्थः ॥

निर्गुणब्रह्मसाक्षात्कारवतः प्राणा नोत्क्रामन्ति किन्तु प्रत्यग्ब्रह्मण्येव तप्तायःपीताम्बुवल्लीयन्त इत्यत्र प्रमाणमाह न तस्य इति । मुक्तेरसाध्यत्वे काठकश्रुतिं प्रमाणयति विमुक्तश्च विमुच्यत इति । पूर्वमपि मुक्त एव सन्नविद्याप्रत्युपस्थापितनामरूपोपाध्यविवेकनिबन्धनस्य संसाराभासस्य नित्यशुद्धबुद्धमुक्तसत्यपरमानन्दाद्वयप्रत्यग्ब्रह्मरूपोऽहमस्मीत्यपरोक्षज्ञानाद्विलयापेक्षया विमुच्यत इत्यर्थः । वस्तुतस्तु न बन्धो न वा मोक्षः । तथा च श्रुतिः ।

"न निरोधो न चोत्पत्तिर्न बन्धो न च साधकः ।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता" ॥

इत्याद्या ॥ ३८ ॥

विद्यासीतावियोगक्षुभितनिजसुखः शोकमोहाभिपन्न-
श्चेतःसौमित्रिमित्रो भवगहनगतः शास्त्रसुग्रीवसख्यः ।
हत्वास्ते दैन्यवालिं मदनजलनिधौ धैर्यसेतुं प्रबध्य
प्रध्वस्ताबोधरक्षःपतिरधिगतचिज्जानकिः स्वात्मरामः ।
वेदान्तसारविवृतिं रामतीर्थाभिधो यतिः ।
चक्रे श्रीकृष्णतीर्थश्रीपदपङ्कजषट्पदः ॥

इति श्रीकृष्णतीर्थपूज्यपादशिष्यश्रीरामतीर्थयतिविरचिता
विद्वन्मनोरञ्जनीनाम्नी वेदान्तसारटीका समाप्ता ॥



१. Cf. अलितप्तलोहक्षिप्तनीरबिन्दुवत् on p. 57, and see Note on it. २. Gaudapāda's *Kārikās* 2. 32. Cf. *Brahmabindu* 10.

# NOTES.



PAGE 1. अखण्डं 'impartite.' The Commentator's definition of this word is illustrated by *Panchadas'ī* ii. 20—"वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादिभिः । वृक्षान्तरात्सजातीयो विजातीयः शिलादिभिः" ॥ See, too, a similar verse in the same author's *Anubhūtiprakās'a* iii. 32. Rāmatīrtha regards the term as synonymous with अनन्त. It should be noticed, too, that he reads अखण्डसच्चिदानन्दम्.

— The terms सत्, चित्, and आनन्द are the only *positive* definitions of pure Brahma; all others are negative. For a full explanation of them, see my *Manual of Hindu Pantheism* (*3rd* edition) pp. 3—10.

— आत्मानं 'Self.' In the *bhāṣya* on *Chhāndogya* 6. 8. 7, S'ankara says—आत्मशब्दस्य निरुपपदस्य प्रत्यगात्मनि गवादिशब्दवन्निरूढत्वात्" । that is, the word आत्मन्, when used alone, without a qualifying prefix, means the individuated self, and not pure unassociated Brahma. Yet the epithets employed in the first line of the verse are universally applied to the latter. The expression प्रत्यगात्मन् used by S'ankara occurs in *Katha Upaniṣad* iv. 1:—"कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्" । on which he says "प्रत्यगात्मानं स्वस्वभावमैक्षत्." In his translation of the *Katha*, published in vol. xxi. of *Transactions of the American Philological Association*, Prof. Whitney renders this passage thus—"a certain wise man, seeking immortality, with eyes turned hitherward, looked upon his self." He therefore takes प्रत्यक् as an adverb qualifying आवृत्तचक्षुः and disconnects it from आत्मानं. The expression is met with in no other old Upanishad, but occurs twice in the *Sarvopaniṣatsāra*.

Page 1. अखिलाधारं 'the substrate of all.' The *s'ruti* quoted by Rāmatīrtha in support of this definition, namely "यतो वा इमानि भूतानि जायन्ते &c.", is in reality opposed to the idea of a substrate, and points rather to the actual production of all things from Brahma, without a thought of an *upādhi*.

Page 2. वेदान्तो नामोपनिषत्प्रमाणं 'the Vedānta is the evidence furnished by the Upaniṣads.' For remarks on these tracts, see pages 15–17 of the 3rd edition of my *Manual of Hindu Pantheism*, and pages 114–122 of the Introduction to Dr. Thibaut's translation of the Vedānta-sūtras and Commentary.

— By the *S'ārīrakasūtra* is, of course, meant that body of aphorisms as interpreted by S'ankara, which forms the basis of the *advaitavāda*. There can be little doubt, however, that S'ankara occasionally read his own ideas into an aphorism; and that Rāmānuja's interpretation, contained in the *S'rībhāṣya*, is, in some cases, to be preferred. On this question, see Dr. Thibaut's valuable Introduction as above.

— अनुबन्धः । Various renderings of this technical term have been proposed, such as 'moving considerations,' 'motives,' '*præcognita*' &c. A lucid explanation of it is given by Dr. Ballantyne in his article entitled *The Gist of the Vedānta as a philosophy* ( Paṇḍit for July 1867 ), and is as follows :—"With reference to the commencing of any scientific work, according to Hindu opinion, four questions present themselves—( 1 ) what qualifications are required to render one competent to enter upon the study ?—( 2 ) what is the subject-matter ?—( 3 ) what connexion is their between the subject-matter and the book itself ?—and ( 4 ) what inducement is there to enter upon the study at all ? The answer to each of these questions is called an *anubandha*—a 'bond of connection' or 'cause'—be-

cause, unless a man knows what a given book is about, and whether he is competent to understand it, and what good the knowledge will do him, he cannot be expected to apply himself to the study of the book." The following is from the *Vāchaspatyam*, under *Anubandha*. "शास्त्रस्यादौ वक्तव्येषु अधिकारिविषयप्रयोजनसम्बन्धेषु। 'ज्ञातार्थं ज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्तते। ग्रन्थादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः' इत्युक्तेर्विषयप्रयोजनादीनामारम्भप्रयोजकत्वात्तद्धेतुत्वम्। अस्मिन्पक्षे चानुबध्यतेऽनेनेति करणे घञ्" ॥

Page 3. अस्मिञ्जन्मनि जन्मान्तरे वा. See Mr. Berriedale Keith's *Pythagoras and the doctrine of Transmigration*, in the Journal of Royal Asiatic Society for 1909.

— "स्वाध्यायोऽध्येतव्यः." This quotation is also found in *S'atapatha* 11. 5. 6. and 7. In the former *Brāhmaṇa*, स्वाध्याय is termed ब्रह्मयज्ञ, or the fifth of the *Mahāyajnas*,—whilst the latter is devoted to: स्वाध्यायप्रशंसा.

— For an account of the birth of Vidura, who was said to be "सर्वबुद्धिमतां वरः," see the closing part of chapter 106 of *Ādiparva*.

Page 4. ज्योतिष्टोम. See Haug's *Ait. Brāhmaṇa*, Vol. I., Introduction, pp. 59-63; and II. p. 240. Also Appendix A., to Mahādeo M. Kunte's *Vicissitudes of Āryan Civilization in India*.

— नित्यानि 'constant rites.' Rāmatīrtha's long discussion of the accuracy of this definition should be noted.

— सन्ध्यावन्दनादीनि. See Dr. R. G. Bhāṇḍārkar's interesting article *The Veda in India*, in the *Indian Antiquary* for 1874 (p. 132).

— जातेष्टि is defined in *Vāchaspatyam* as "पुत्रजन्मोत्तरं श्रुतिविहिते वैश्वानराख्ये इष्टिभेदे"। See the *S'rutis* quoted by Rāmatīrtha (p. 73) as bearing on this; also *bhāṣya*

on *Mīmāṁsā* 1. 4. 17, and the जातेष्टिन्याय in *Maxims* iii. (2nd edn.).

Page 4. चान्द्रायण. Four varieties of this penance are detailed in *Manu.* xi. 217–220, namely *pipīlikāmadhya, yavamadhya, yatichāndrāyaṇa,* and *s'is'uchāndrayaṇa.* The *kṛichchhra* is described in verses 212–216.

— शाण्डिल्यविद्या. This is contained in *Chhāndogya* 3. 14. Dr. Thibaut says regarding it:—"This small *vidyā* is decidedly one of the first and most characteristic texts; it would be difficult to point out another passage setting forth with greater force and eloquence and in an equally short compass the central doctrine of the Upaniṣads." Introduction to *Translation of Vedāntasūtras*, p. cxiv. Yet, according to S'ankara's *bhāṣya* on Brahmasūtras. 1. 2. 1, 2, it has reference only to *Īsvara*, and not to pure Brahma!

— उपासनानां तु चित्तैकाग्र्यं। In S'ankara's *bhāṣya* on *Vedāntasūtra* 1. 1. 11, the objects of *upāsana* are said to be the following:—"कानिचिद्ब्रह्मण उपासनान्यभ्युदयार्थानि कानिचित्क्रममुक्त्यर्थानि कानिचित्कर्मसमृद्ध्यर्थानि तेषां गुणविशेषोपाधिभेदेन भेदः"।

— पितृलोक and सत्यलोक are the first and last of the seven upper worlds.

— आमुष्मिकाणां &c. It must never be forgotten that abode in the heavens of Hinduism is as impermanent as mundane existence; and that, when the merit which brought it about is exhausted, the soul returns to a new birth on earth. See भाण्डानुसारिस्नेहवत् in *Maxims* iii.

— साधनानि. The list is taken from the *bhāṣya* on *Vedāntasūtras* 1. 1. 1 (page 23 of the Ānandās'rama edition.)

Page 5. श्रद्धा 'faith'. In *Gītā* xvii. 28, the absence of faith on the part of the performer of religious rites and ceremonies is said to vitiate them. In *Mahābhārata* xii.

9456 (chap. 265) too it is said—"अश्रद्धा परमं पापं श्रद्धा पापप्रमोचनी"। In the Christian scriptures, we read—"Without faith it is impossible to please him [*i. e.* God]; for he that cometh to God must believe that He is, and that He is a rewarder of them that diligently seek Him." In Christianity, श्रद्धा leads to भक्ति, or devotion to the person of its Founder, Christ; and this latter quality is much insisted on in the *Gītā* and the *Purāṇas,* though unknown to the earliest Indian scriptures. Hence, some have supposed a contact with Christianity prior to the time of those works. See Prof. Cowell's remarks on this subject in the Preface to his translation of the *Aphorisms of S'āṇḍilya,* a treatise devoted to भक्तिजिज्ञासा; also pp. 35—37 of my *Manual of Hindu Pantheism.*

Page 5. मुमुक्षुत्वं मोक्षेच्छा। This is an inexact definition, since the former word means 'the being a possessor of a desire for emancipation,' and not merely the desire itself. See Rāmatīrtha (p. 81.). It is emancipation from successive births which is desired, these being necessary, according to Hindu notions, in order that each may reap the fruit of his works; as stated in *Mahābhārata,* xii. 12152—"बालो युवा वा वृद्धश्च यत्करोति शुभाशुभम्। तस्यां तस्यामवस्थायां भुंक्ते जन्मनि जन्मनि"॥ See the nyāya य एव करोति स एव भुंक्ते in *Maxims* iii (2nd edn.).

— "शान्तो दान्तः"। The entire passage is "शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्यति." Rāmatīrtha points out that from this come the शम, दम, उपरति, तितिक्षा and समाधान of our text. But whence comes the श्रद्धा? It is added from the *Mādhyandina* recension of the same Upaniṣad, which reads श्रद्धावित्तः instead of the समाहितः of the *Kāṇva;* so our author has combined the two, in accordance with the *guṇopasaṁhāranyāya.* The six qualities, *s'ama* and the rest, are referred to in the same order in the verse quoted from the

*Upades'asāhasrī.* A passage of very similar import is found in *Mokṣadharma* ( chap. 309 of Bombay edition, and 310 of the Calcutta ), part of which is as follows :— "श्रद्धान्विताथाथ गुणान्विताय परापवादाद्विरताय नित्यं। विशुद्धयोगाय बुधाय नित्यं क्रियावते च क्षमिणे हिताय। विविक्तशीलाय विधिप्रियाय विवादहीनाय बहुश्रुताय। विजानते चैव न चाहितक्षमे दमे च शक्ताय शमे च देयम्। ...जितेन्द्रियायैतदसंशयं ते भवेत्प्रदेयं परमं नरेन्द्र." It looks as if S'ankara had these lines in mind when writing his own. In *Naiṣkarmyasiddhi* iv. 71 we are told of these to whom instruction is *not* to be given.

Page 6. जीवब्रह्मैक्यं. This is, of course, the essence of the *advaitavāda.* The *vis'iṣṭādvaitavāda*, of which Rāmānuja is the exponent, holds the separate existence of souls. See Translation of *Sarvadars'anasangraha*, p. 66; and H. H. Wilson's *Essays on Religion of Hindus*, vol. i. pp. 43, 44. Also pages 68–74 of Dr. R. G. Bhāṇḍārkar's *Report on Sanskrit MSS.* for 1883—84.

Page 7. गुरुमुपसृत्य. Rāmatīrtha quotes two passages from the *Chhāndogya* which indicate the need of a teacher. S'ankara, too, insists upon it in his *bhāṣya* on *Muṇḍaka* 1. 2. 12, where he says "शास्त्रज्ञोऽपि स्वातन्त्र्येण ब्रह्मज्ञानान्वेषणं न कुर्यात्"।

— अध्यारोपापवादन्यायेन 'by the method of the refutation of the erroneous imputation;' so Dr. Ballantyne. In Dr. Fitzedward Hall's *Rational Refutation*, these two words are rendered 'false imputation' and 'rescission' respectively. The following passage occurs on p. 209 of that work—"When the Vedāntins speak of the origin of the world, for instance, they do not believe its origin to be true. This mode of expression they call 'false imputation'. It consists in holding for true that which is false, in accommodation to the intelligence of the uninitiated. At a further stage of instruction, when the time has arrived for propounding the esoteric view, the false

imputation is gainsaid, and this gainsaying is termed rescission;" अध्यास, which is synonymous with अध्यारोप, is defined in the opening part of *S'ārīrakabhāṣya* as, "स्मृतिरूपः परत्र पूर्वदृष्टावभासः" "the appearance, in the form of remembrance, of something seen before elsewhere," as, for example, the appearance of silver in nacre. Three other definitions of the term follow; and further on it is defined as अतस्मिंस्तद्बुद्धिः, an expression reproduced in *Vivekachūḍāmaṇi* 140. See also अध्यारोपन्याय and अपवादन्याय in *Vāchaspatyam*, under the word न्याय; and the opening part of *bhāṣya* on *Bṛihadāraṇyaka Upaniṣad* ( p. 10 of Ānandās'rama edition ).

Page 8. अज्ञानं तु । Note, in the preceding line, the declared *unreality* of ignorance, although it is accepted as an indescribable '*something*', and the material cause of the world! The following extract from Professor Venis' translation of the *Vedāntasiddhāntamukatāvali* (pp. 14, 15 ) will be of interest here:—"Of the reality of Nescience [ *avidyā* ] there is no evidence, revealed or human ...Is Nescience proved by Veda, or by perception &c., or is it assumed to account for the world of experience, which cannot otherwise be accounted for? Not by Veda...Nor by perception, inference, or human teaching. For, if by any of these Nescience were clearly proved, controversy would be at an end. And since there is no evidence for Nescience, it must needs be granted that Nescience is *assumed* to account for the otherwise inexplicable production of the unreal world...For there is no other course apart from this assumption of Nescience." The absurdity of seeking a *proof* of Ignorance is set forth in the following couplet quoted on page 125 of the foregoing work.—"अज्ञानं ज्ञातुमिच्छेद्यो मानेनात्यन्तमूढधीः । स तु नूनं तमः पश्येद्दीपेनोत्तमतेजसा" ॥ For the origin of the idea expressed in this verse, see तमोदीपन्याय in *Maxims* i ( 2nd edition ). It may be

added that throughout the *Brahmasūtrabhāṣya* the word अविद्या is used, and not अज्ञान.

Page 8. सदसद्भ्यामनिर्वचनीयं। This expression, too, does not occur in the *bhāṣya*. In a very important description of *māyā* in the *bhāṣya* on 1. 4. 3, we read "अव्यक्ता हि सा माया तत्वान्यत्वनिरूपणस्याशक्यत्वात्"; in 2. 1. 14 "अविद्याकल्पिते नामरूपे तत्त्वान्यत्वाभ्यामनिर्वचनीये" and in 2. 1. 27 "अविद्याकल्पितेन च नामरूपलक्षणेन रूपभेदेन व्याकृताव्याकृतात्मकेन तत्त्वान्यत्वाभ्यामनिर्वचनीयेन &c.," but never as in the *Vedāntasāra*. For an indignant protest against this expression see Sānkhya *Aphorisms* i. 20-26. For a defence of it see Rāmatīrtha, page 87.

— त्रिगुणात्मकं। This idea seems to have been borrowed from the Sānkhya system since the time of S'ankara. It occurs nowhere in the *Brahmasūtrabhāṣya* as a tenet of the Vedānta.

Page 9. उपाधि. A most important word in Indian philosophy. I have rendered it "associate;" and उपहित and अनुपहित "associated," and "unassociated," respectively. This forms a convenient series. "Environment" and "limiting adjunct" have also been used by scholars as equivalents of the first. In *Vāchaspatya* it is defined as "अन्यथास्थितस्य वस्तुनोऽन्यथाप्रकाशनरूपे."

— ईश्वरः। It is most essential for the student of Vedānta to bear in mind that, according to the *advaitavādins* God is an unreal as the universe with which they identify him. There is no such thing therefore as a *personal* God; yet they imagine that there is, and ascribe attributes to him. The identity of God and the phenomenal is plainly stated in *Yogavāsiṣṭha* 6. 48. 23—"तस्मै सर्वं ततः सर्वं स सर्वं सर्वतश्च सः"। Every thing, being a portion of God, may of course be worshipped, as stated distinctly in *Panchadas'i* vi. 206-9; though why man, himself a component part of this

deity, should worship another, and perhaps less exalted, part, is not clear?

The student of *advaitavāda* must be warned, too, against speaking of Brahman as God, which is manifestly incorrect,—God being Brahma-associated-with-ignorance. In *Brahmasūtrabhāṣya* 2. 3. 45, He is described as निरतिशयोपाधिसंपन्नः। The learned Dr. Ballantyne, however, made this mistake again and again; and Mr. Bābā Padmanji, in his excellent *Manual of Hinduism*, says "ईश्वराविपर्यींच्या ज्ञानाला ब्रह्मज्ञान म्हणतात," which, though true in respect of the followers of Rāmānuja, is manifestly inaccurate as far as the more numerous *advaitavādins* are concerned. On this ground, the term Pantheism as applied to this system is clearly a misnomer, and only approximately represents the views of its adherents. A more accurate name would be Pan-Brahmanism, but it is too clumsy to be adopted. No *activity* is attributed to Is'vara as जगत्कारणं, and the Vedānta knows of no such thing as *creation*, that is the production of something not already existing in another form.

Page 9. सकलाज्ञानावभासकत्वात्. In every edition, from that of Dr. Ballantyne downwards, a full stop has been placed after व्यपदिश्यते, and the words अस्य सर्वज्ञत्वं have been added after the above compound, so as to make the sentence mean 'his omniscience is in consequence of his being the illuminator of the whole of ignorance.' I have not, however, found any manuscript authority for this, the reading being invariably as I have given it. The words अस्य सर्वज्ञत्वं seem to have been imported in order to make the passage coincide in form with that relating to प्राज्ञ.

Page 11. प्राज्ञ is here said to be 'parviscient' (प्रायेण अज्ञः as Rāmatirtha explains it on p. 94) in opposition to the omniscient ईश्वर. This sense of the word is *directly*

*opposed* to that given to it in the Upanishads and in S'ankara's *Brahmasūtrabhāṣha*, and is an invention of the moderns. For examples of its usage in former times, see *Bṛihadāraṇyaka* 4. 3. 35, and *Māṇḍūkya* 5; also *S'ārīrakabhāṣya* 2. 3. 21; 3. 2. 25–27, where it is applied to ईश्वर in contradistinction to जीव.

Page 11. एकाज्ञानावभासकत्वात्। Here, too, in every edition but that of Dr. Böhtlingk, a full-stop comes after इत्युच्यते, and the next sentence is "एकाज्ञानावभासकत्वादस्य प्राज्ञत्वमस्पष्टोपाधितयानतिप्रकाशकत्वं," a reading opposed to that of every MS. that I have seen.

Page 12. आधारभूतानुपहितकाशवत्. Rāmatīrtha points out (on p. 95) that ether is not really the substrate of the forest or of the lake, because it is not their material cause; but as they could not exist without space, it is called their substrate.

— तुरीयं 'the fourth'. The other three states are, (1) dreamless sleep. (2) dreaming, and (3) waking, with which are respectively associated Īs'vara-Prājna, Sutrātmā-Taijasa, and Vais'vānara-Vis'va. The old Marāṭhā poet Mukundarāj, in the *pūrvārdha* of his philosophical poem *Vivekasindhu*, describes also an उन्मनी अवस्था. In iii. 31, he says—"हे गुणत्रयाची साम्यता। ईश्वराची उन्मनी अवस्था" ।, and in vi. 87—90—"तुर्येची परिपक्वता। तेचि उन्मनी अवस्था। निंबोळियांस् मधुरता। जैसी पक्वदशें ॥ ८७ ॥ तुर्या ते शुद्धवासना। तेथें ह्याची कडवटपणा। उन्मनी शुद्ध निर्वासना। ह्मणूनि गोड ते ॥ ८८ ॥ जैसी साखर उदकीं विरे। परी तेथींची मधुरता उरे। तैसी तुर्या स्वरूपीं मुरे। ते उन्मनी गा ॥ ८९ ॥ अवस्था पंचमा नास्ति। ऐसी हे वेदश्रुती। ह्मणूनि तुर्येची परिणामस्थिति। ते उन्मनी कीं ॥ ९० ॥" This *avasthā* is described in the *Haṭhayogapradīpikā*. Amongst other things it is said (iv. 106):—शंखदुन्दुभिनादं च न श्रृणोति कदाचन। काष्ठवज्जायते देह उन्मन्यवस्थया ध्रुवम् "॥ As to the absence of any fifth state, see *Brahmasūtrabhaṣya* 3. 2. 10.

— "कार्योपाधिरयं जीवः &c." The first line of this quotation

occurs again in xx. 49 of Vidyāraṇya's work. Appaya-dīkṣita, however, in his *Siddhāntalcs'a* (p. 14, in Vizianagram Series), calls it *S'ruti*; and so does the author of *Yogavārtika* (i. 24). The verse is quoted, too, in the *Mahāvākyavivarana* (Jagadīs'vara Press, Bombay, 1883) folio 19*a*, and after it is added "इति शंकरभाष्यप्रामाण्यात्"। If the passage is really to be found in any *bhāṣya* of S'ankara's, then, of course, Vidyāraṇya is not its author. With the definitions of ईश्वर and जीव here given, compare those of *Sankṣepa-s'āriraka*, (iii. 277-8)—"उपाधिरज्ञानमनादिसिद्धमस्मिंश्चिदाभासनमीश्वरत्वम्। ... उपाधिरन्तःकरणं स्वमर्थे जीवत्वमाभासनमत्र तद्वत्"।

Page 13. The two powers of Ignorance, 'concealment' and 'projection,' correspond with our 'want of apprehension' and 'misapprehension' respectively.

Page 16. सांख्यनैयायिकपक्षौ। The Sānkhyas hold that *pradhāna* evolves itself spontaneously, whilst the latter believe in the independent action of atoms as the cause of all things. Their views are stated and refuted in *Brahmasūtra* 2. 2. 1—17.

— "रचनानुपपत्तेश्च &c." The editions of the *Bibliotheca Indica* and Jīvānanda misread this *Sūtra*. For नानुमानं they read अनुमानं. The Ānandās'rama edition has the correct reading.

— "कारणगुणा हि &c." The *Tarkabhāṣā*, to which I have traced this nyāya, is believed by Dr. R. G. Bhāṇḍārkar to be "considerably older" than the latter part of 14th century in which one of its commentators lived. The ultimate source of this nyāya is probably *Vais'eṣika-sūtra* 2. 1. 24. The Vedāntins and Sānkhyas hold that an effect exists, prior to its production, in its material cause,—a tenet denied by the Vais'eṣikas. The former are therefore termed *satkāryavādin*, and the latter

*asatkāryavādin.* See *S'ānkarabhāṣya* 2. 1. 10, 18: and 2. 2. 11.

— कारणगुणप्रक्रमन्याय: is explained as follows in *Vāchaspatyam* (s. v. न्याय):—"कारणगुणाः सजातीयगुणान् कार्ये आरभन्ते यथा तन्तुरूपादयः स्वकार्ये पटे सजातीयरूपादीनारभन्ते न विजातीयानेवं यत्र कारणगुणानुगमस्तत्रास्य प्रवृत्तिः" ॥

Page 17. In the edition, except that of Dr. Böhtlingk, definitons of चित्त and अहङ्कार are given after the words "अनयोरेव चित्ताहङ्कारयोरन्तर्भावः" but this is not supported by my manuscripts. It looks as if they had got into the text from Rāmatīrtha's commentary where they occur *verbatim* ( page 101 ).

Page 18. जीवः । The description of *jīva* which is given in *Brahmasūtrabhāṣya* may prove of interest. He is not born and does not die; birth and death relate only to his body ( 2. 3. 16 ); he is not produced or absorbed, as ether is ( 2. 3. 17 ); he is the highest Brahma in contact with an *upādhi*, and is said to be ज्ञः a term which, according to S'ankara, means merely नित्यचैतन्यः and not a knowing subject ( 2. 3. 18 ); he is not of small size but omnipresent ( विभुः ) like Brahma ( 2. 3. 29 ); he is associated with *buddhi* so long as he continues to transmigrate ( 2. 3. 30 ); he is not really an independent agent, but his activity is due to *buddhi* ( 2. 3. 40 ); his activity is in subordination to God, *who impels him to good or evil* according as He desires to elevate or degrade him in the future ( 2. 3. 41 ); he is 'as it were' a part of God, but not really so, since God has no parts ( 2. 3. 43 ); he is described as निहीनोपाधिसंपन्नः (2. 3. 45); he is a mere reflection of God (2. 3. 50); in transmigration he is attended by the chief vital air, the organs, mind, *avidyā*, works *pūrvaprajnā*, and the subtle elements (3. 1. 1); he is non-different from God, though the fact is concealed by *avidyā* ( 3. 2. 5, 6 ); without an *upādhi* he would not be *jīva*, and in reality he never

ceases to be Brahma ( 3. 2. 7, 9 ); in sound sleep he is joined to Brahma, but returns to his own body on awaking ( 3. 2. 9, 31 ); there are only four states into which he can possibly enter, and there is no fifth; but he may be in a state of swoon which is said to be a semi-entrance into sound sleep and another state ( 3. 2. 10 ); shaking off *avidyā* by means of *vidyā*, he becomes one with the infinite *prājna* ( 3. 2. 26 ).

Page 18. मनस्तु ज्ञानेन्द्रियैः सहितं । All the editions, without exception, read here कर्मेन्द्रियैः which is opposed by most of my MSS. of the text and by all those of the commentary. My reading is confirmed by *Vivekachūḍāmaṇi* 170—"ज्ञानेन्द्रियाणि च मनश्च मनोमयः स्यात्" and by *Panchadas'ī* i. 35—"सात्त्विकैर्धीन्द्रियैः साकं विमर्षात्मा मनोमयः" ।

Page 19. With the quotation from *Gorakṣās'ataka*, compare the following from Sures'vara's *Mānasollāsa* ( ix. 14, 15 )—"नागो हिक्काकरः कूर्मो निमेषोन्मेषकारकः । क्षुतं करोति कृकलो देवदत्तो विजृम्भणम् । स्थौल्यं धनञ्जयः कुर्यान्मृतं च न विमुञ्चति" ॥

— सूक्ष्मशरीरं । As to this enveloping Jīva during transmigration, see reference above to *Brahmasūtrabhāṣya* 3. 1. 1; also Notes to page 100.

Page 20. In line 11, the editions, contrary to my MSS., insert सूक्ष्माभिः before the word मनोवृत्तिभिः ।

Page 21. पञ्चीकरणं The following is from S'ankara's *Pañchīkaraṇa*—"पंचमहाभूतानामेकैकं द्विधा विभज्य चतुर्धा कृत्वा स्वार्धभागं विहायेतरेषु पंचधा पंचीकृतेषु पंचीकरणं भवति" । Sures'vara's *vārtika* on the above reads as follows:—"पृथिव्यादीनि भूतानि प्रत्येकं विभजेद्द्विधा । एकैकं भागमादाय चतुर्धा विभजेत्पुनः ॥ ८ ॥ एकैकं भागमेकस्मिन्भूते संवेशयेत्क्रमात् । ततश्चाकाशभूतस्य भागाः पंच भवन्ति हि ॥ ९ ॥ वाय्वादिभागाश्चत्वारो वाय्वादिष्वेवमादिशेत् । पंचीकरणमेतत्स्यादित्याहुस्तत्ववेदिनः ॥ १० ॥"

Page 22. "वैशेष्यात्" So all my MSS., but most of the editions read वैशिष्ट्यात्. Dr. Ballantyne's rendering of

this *sūtra* is—"But as they differ, the one is called this, and the other is called that." Bearing in mind, however, that the second "तद्वादः" forms no part of the aphorism but merely indicates the close of the chapter, it is clear that the above rendering of "तद्वादस्तद्वादः" will not do. And since S'ankara gives भूयस्त्वं as the equivalent of वैशेष्यं, the rest of the translation must go too. Here is a portion of the *bhāṣya* on that aphorism:—"विशेषस्य भावो वैशेष्यं भूयस्त्वमिति यावत् । सत्यपि त्रिवृत्करणे क्वचित्कस्यचिद्भूतधातोर्भूयस्त्वमुपलक्ष्यते अग्नेस्तेजोभूयस्त्वमुदकस्याब्भूयस्त्वं पृथिव्या अन्नभूयस्त्वं इति । ...तस्मात्सत्यपि त्रिवृत्करणे वैशेष्यादेष तेजोऽबन्नविशेषवादो भूतभौतिकविषय उपपद्यते। तद्वादस्तद्वाद इति पदाभ्यासोऽध्यायपरिसमाप्तिं द्योतयति" ॥ So, too, the *Brahmasūtratātparyavivaraṇa*—"विशेषस्य भावो वैशेष्यमाधिक्यम् । अग्नेस्तेजोभूयस्त्वं ... । इत्येवं त्रिवृत्कृतेष्वपि तत्तद्भागानां बहुत्वात्तदीयत्वव्यवहारास्त्रिगुणरज्जुवत् । तस्माद्वैशेष्यात्तद्वादः" ॥ Also the *Vedāntakaustubhaprabhā*, "विशेषस्य भा[वो वै]शेष्यं भागभूयस्त्वमिति यावत् । तस्य पृथिव्यादौ दर्शनात्तद्वादः स तेजोयन्नविशेषवादो भौतिकवस्तुविशेषवादश्च सूपपन्न इत्यर्थः ॥" In the third edition of my *Manual of Hindu Pantheism*, I have therefore translated thus:—"Their appellation is on account of the preponderance [ of that element after which each is named ].

Page 23. Line 6. सर्वनराभिमानित्वात् । The word *abhimānin* occurs at least eight times in S'ankara's *bhāṣya*, and once in *sūtra* 2. 1. 5, and in every case it has the sense of *adhiṣṭhātṛi*. The following are examples:—"आदित्यादिशरीराभिमानिभ्यो जीवेभ्यः" 1. 1. 21; "पृथिव्याद्यभिमानी कश्चिद्देवः" 1. 2. 18.

— Line 24. इन्द्रियैरर्थोपलब्धेश्च. Compare Rāmatīrtha's quotation, on p. 114, from S'ankara's *Panchīkaraṇa*.

Page 24. The internal organ, though one, is composed of four parts—hence the expression अन्तरिन्द्रियचतुष्केण. In *Vedāntaparibhāṣā* i. (Paṇḍit, vol. iv. p. 395) it is said:— एवं वृत्तिभेदेनैकमप्यन्तःकरणं मन इति बुद्धिरित्यहंकार इति

चित्तमिति चाख्यायते । तदुक्तम् । 'मनो बुद्धिरहंकारश्चित्तं करणमान्तरम् । संशयो निश्चयो गर्वः स्मरणं विषया इमे' ॥" See, too, Sures'vara's *Panchīkaraṇavārtika*, 33, 34.

Page 26. For the doctrines of the Chārvākas, see the first chapter of *Sarvadars'anasangraha*; H. H. Wilson's *Works* i. 22, ii. 87; and Colebrooke's *Essays* i. 426—30. They are also called Lokāyatikas (as in *Sānkarabhāṣya* 1. 1. 1; 2. 2. 2; 3. 3. 53, 54.), but Rāmatīrtha seems to limit this term to one subdivision of them. See page 115.

— The two Bauddhas referred to are supposed to represent the views of the *Yogāchāras* and *Mādhyamikas*, respectively. "Some maintain that all is void, following, as it seems, a literal interpretation of Buddha's *sūtras*. To these the designation of *Mādhyamika* is assigned by several of the commentators of the Vedānta ...Other disciples of Buddha except internal sensation or intelligence (*vijnāna*), and acknowledge all else to be void. They maintain the eternal existence of conscious sense alone. These are called *Yogāchāras*." Colebrooke's *Essays*, i. 415. *Brahmasūtras* 2. 2. 28—32 are supposed to be directed against these two sects of Buddhists.

Page 27. The *Prābhākaras* and *Bhāṭṭas* are the followers of the learned Mīmāṁsakas Prabhākara and Kumārila Bhaṭṭa. *Essays* i. 322, 329.

Page 28. स्थूलारुन्धतीन्याय. In *Vāchaspatyam* (s. v. न्याय) this is explained in language very similar to that of our commentary, and then is added—"एवं यत्रातिसूक्ष्मदुर्विज्ञेयवस्तुविज्ञानाय क्रमेण तत्समीपसमीपतरसमीपतमं वस्तु शास्त्रेण तत्तयोच्यते तत्र स्थूलारुन्धतीन्यायोऽवतरति । अयमेव केनचिदरुन्धतीप्रदर्शनन्यायत्वेनोदाह्रियते" ॥ In the same lexicon, under अरुन्धतीदर्शनन्याय (p. 360.), the following explanation is given :—"प्रथमस्थूलदर्शनेन सूक्ष्मदर्शनरूपे न्याये । 'यथारुन्धतीं दिदर्शयिषुस्तत्समीपस्थां स्थूलां ताराममुख्यां प्रथममरुन्धतीति ग्राहयित्वा तां प्रत्याख्याय पश्चादरुन्धतीमेव ग्राहयति' शा° भा°" ॥ The passage quoted in this definition is from *S'ārīraka-*

